सएवचरणोस्त्वीयोस्पृष्टंनसम्यक्मन्यतेऽनुजानातीत्यन्वयः अत्रतृष्णारूपहेतुतत्कार्ययोः स्पष्टमभि ानं ॥ भेदांतरमाह हेतुहेतुमतोरिकेचित भट्टोद्भटप्रभृत
यः तदुक्तं हेतुमतासहहेतोरभिधानमभेदतोहेतु रितिलक्ष्मीतिकटाक्षाः विदुषांलक्ष्मीविलासाइत्यन्वयः अत्रविलासहेतोर्विलासाभिन्नत्वेनाभिधानं एवंवि
धलक्षणायाः प्रयोजनमाह अत्रेतिकार्यावश्यंभावश्चतच्छैघ्र्यंचेतिविग्रहः आदिनाऽपथ्याशनंरोगइत्यादौकार्यगतोपादेयत्वानुपादेयत्वादिसंग्रहः आ
पुरितिवीरः कलिंगेश्वरः कलिंगदेशाधिपोविजयतइत्यन्वयः कीदृशः दानरूपस्यमहोत्सवस्य आपुरितिकार्याभिन्नत्वेनाभिधानं एवमग्रेपिविशेषेणन

एषतेविद्रुमच्छायोमरुमार्गइवाधरः कस्यनोतनुतेतन्वि पिपासाकुलितंमनः मानेनेच्छतिवारयत्युपशमेक्ष्मामालिखंत्यांह्रियांस्वा
तंत्र्येपरिवृत्त्यतिष्ठतिकरौव्याधूयधैर्यंगते तृष्णेत्वामनुबध्नतापलमियत्प्राप्तंजनेनामुनायत्स्पृष्टोनपदासएवचरणोस्पृष्टंनसंमन्य
ते इत्युदाहरणं ॥ हेतुहेतुमतोरैक्यंहेतुंकिंचिदाचक्षते लक्ष्मीविलासाविदुषांकटाक्षावेंकटप्रभोः अत्रचकार्यावश्यंभावतच्छैघ्र्या
दिप्रत्यायनार्थः कार्यकारणभेदव्यपदेशः यथावा आयुर्दानमहोत्सवस्यविततक्षोणीभृतांमूर्तिमान् विश्वासोनयनोत्सवोमृगदृ
शांकीर्तेः प्रकाशःपरः आनंदःकलिताकृतिः सुमनसांवीरश्रियोजीवितंधर्मस्यैषनिकेतनंविजयतेवीरःकलिंगेश्वरः अत्रदानम
होत्सवायुष्करत्वादिनाध्यवसितेराज्ञितदायुष्ट्वादिव्यपदेशः इत्संख्यातमलंकारालक्षयित्वानिद र्शिताः प्राचामाधुनिकानांचमतान्वा
लोच्यसर्वतः रसभावतदाभासभावशांतिनिबंधनाः चत्वारोरसवत्प्रेयऊर्जस्विच्चसमाहितं भावस्यचोदयःसंधिःशबलत्वमितित्रयः

तानांक्षोणीभृतांराज्ञांकलिताकृतिः धृताकारःवीरश्रियः वीरलक्ष्म्याःनिकेतनंस्थानं इतिश्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मज
श्रीरामचंद्रसूरिसूनुनावैद्यनाथेनकृतायामलंकारचंद्रिकाख्यायांकुवलयानंदटीकायांहेत्वलंकारप्रकरणंसंपूर्णं भावस्येतिनिर्वेदादेर्व्यभिचारिभावस्ये
त्यर्थः प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः तेचप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्याख्याः विभावेत्यादिरत्यादिरालंबनोद्दीपनरूपाणिन्ना यिकाचं

द्रोदयादीनिकारणानिकाव्येवर्ण्यमानानिविभावयंतीतिव्यु
त्पत्याविभावपदे

नाभिधीयंते कार्याणि च कटाक्षरोमांचादीनि तथा विधान्येवानुपश्चाद्भवंतीति सुत्तत्वादनुभावपदेन एषामेव कार्याणां रत्यादिनोत्पादनेकर्तव्ये सहकारिभूतान्युक्ता
तादीनि च व्यभिचारिपदेन विशेषादभितः समंततः येस्थायिनं चारयंतीति सुस्पतेः एवं रतिरासक्त्यनुरागादिपर्यायवाच्यांतःकरणवृत्तिः विकृतविदूषिकादिचे
ष्टादर्शनजन्याचित्तस्यविकासरूपावृत्तिर्हासः इष्टनाशानिष्टलाभादिजन्याचित्तवृत्तिः शोकः प्रसिद्धः आदिपदेन क्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्या
नां षण्णां परिग्रहः विशेषपदेन च रत्यादेः स्थायित्वप्रयोजकं परिपुष्टत्वं कांताविषायत्वमितराणां त्वं च विवक्षितं ॥ तदुक्तं रत्यादिश्चेन्निरंगः स्याद्देवादिविषयो

अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात् एवं पंचदशान्यानप्यलंकारान्विदुर्बुधाः तत्र विभावानुभावव्यभिचारिभिर्व्यंजितो रतिहा
सशोकादिश्चित्तवृत्तिविशेषो रसः स यत्र परस्यांगं भवति तत्र रसवदलंकारः ॥ विभावानुभावाभ्यामभिव्यंजितो निर्वेदादिस्त्वयस्थि
राद्देवो देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिश्च भावः स यत्रापरस्यांगं स प्रेयोलंकारः अनौचित्येन प्रवृत्तौ रसो भावश्च रसा
भासो भावाभासश्चेत्युच्यते स यत्रापरस्यांगं तदूर्जस्वित् भावस्य प्रशाम्यदवस्था भावशांतिः तस्याः परांगत्वे समाहितं भावस्योद्गमा
वस्था भावोदयः द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धा भावसंधिः बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता एतेषामितरां
गत्वे भावोदयस्त्वयोलंकाराः तत्र रसवदुदाहरणं मुनिर्जयति योगींद्रो महात्मा कुंभसंभवः येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ
अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोंगं यथा वा अपेसरसनोत्कर्षी पीनस्तनविमर्दनः नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः

यथा वा अस्यांगभावभाग्भावस्यान्नतदास्थापि शब्दभागिति स्थायिन एव चाभिव्यक्तरसत्वं यदाहः कारणान्यथकार्याणि सहकारीणि यानि च रत्यादेः स्थायिनालो
केतानि चेन्नाट्यकाव्ययोः विभावाअनुभावास्तत्कथ्यते व्यभिचारिणः व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृत इति अभिव्यक्तानां च रत्यादीनां रसरूपाणां
क्रमात् शृंगारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशांतरूपविशेषसंज्ञा बोध्याः निर्वेदादिरिति निर्वेदादिरिति निर्वेदग्लानिशंकाख्यास्तथासूयामद

स्मृतिर्धृतिः व्रीडा चपलता हर्षश्चावेगो जडता तथा गर्वो विषादश्चौत्सुक्यं निद्रा विस्मृतिरेव च स्वप्नो विबोधो ऽमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथा
मरणमेव च त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः इति भरतेनोक्ताः लज्जादिना विकारगोपनमवहित्थाख्यो भाव
देवतेत्यादयः रिपुरत्यादेः हृत्पद्मलक्षणं रतिरिति वा पुरस्कृहासादेः अनौचित्येनेति एतच्चोदाहरणे दर्शयिष्यामः मुनिरितिकुंभसंभवो ऽगस्त्यः एकचुलकेन स
मुद्रे पीयमाने तदन्तर्गतयोः रवतार रूपयोर्मत्स्यकूर्मयोर्दर्शनेन गम्यो ऽद्भुतरसो मुनिप्रभावातिशयपर्यवसन्नतया तद्विषयरतिपोषकत्वात् तदंगमिति भावः ॥

अत्र करुणस्य शृंगारोऽंगं प्रेयोलंकार एव भावालंकार उच्यते ॥ सपद्या कदा वाराणस्याममरतटिनीरोधसि वसन् वसानः कौपीनं शि
रसि निदधानोंजलिपुटं अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् अत्र शांतिरसस्य क
देति पदसूचितचिंताख्यो व्यभिचारिभावोंगं यथा वा अत्युच्चाः परितः स्फुरंति गिरयः स्फारास्तथांभोधयस्तानेतानपि बिभ्रती कि
मपि न श्रांतासि तुभ्यं नमः आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः अ
त्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोंगं ॥ जं त्वद्विधया लत्वं प्रत्यर्थिवसुधरेशतरुणीः संत्रासतः सत्वरं याती वीरविलु
ठितुं सरभसं याताः किराता वने तिष्ठंति स्तिमिताः प्ररूढपलकास्ते विस्मृतोपक्रमास्तासामुत्तरलैः स्तनैरतितरां लोलैरपांगैरपि
अत्र प्रभुविषयरतिभावस्य शृंगाररसाभासोंगं यथा वा त्वयि लोचनगोचरं गते सफलं जन्म नृसिंह भूपते अजनिष्ट ममेति सादरंयु
धि विज्ञापयति द्विषां गणः अत्र कवेः ॥
अपमिति भूरिश्रवसश्छिन्नं हस्तमालोक्य तद्वधूनामुक्तिः स पूर्वानुभूतो यं करः यः कांचीसमाकर्षण
पीलः नीवीवसनग्रंथिः तस्या विस्रंसनो मोचक इति स्मर्यमाणया शृंगारावस्थया करुणरसपरिपोषः ॥ कदेति निमिषमिव दिवसान् कदा नेष्यामीत्यन्वयः
कीदृशः काशपंगंगातीरे वसन् अये इत्यादेरिति क्रोशन्नित्यनेनान्वयः अत्युच्चा इति स्फाराः विस्तीर्णाः प्रस्तौमि प्रसंजयामि भुवः पृथिव्याः इमां भुवं बिभ्रत

धार्यमाणाः त्वत्प्रत्यर्थीति हेवीरसंत्रासतोभापादूने सत्वरं गच्छतीः तव प्रत्यर्थिनः शात्रवोव संधरत्वा भूपास्तेषां तरुणी विलुठितुपाता किरातानाभिल्लास्तासां
तरुणीनामुत्तरलैरतिचपलैः स्तनै रतितरामतित्रापेन लोलैश्च चलैरपांगैर्नेत्रप्रांतैश्च ते स्तिमिताः स्तब्धाप्रोद्धततरोमांचाः विस्मृतउप
क्रमोल्लुंठनरूपौपि स्तादृशास्तिष्ठंतीत्यन्वयः अत्रशृंगारस्यानुरक्तराजवनिताविषयत्वादनौचित्येन प्रवृत्तिरित्याभासरूपत्वं त्वयीति अत्र निश्च
अभूतपुधिसंग्रामे तद्विषयेत्ति प्रभुविषयाद्विषत्गणस्य पारतिस्तद्रूप इत्यर्थः अत्रशत्रुविषयकत्वरूपानौचित्येन प्रवर्त्तितत्वाद्भावस्याभासत्वं प

प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोंगं समाहितं यथा पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालं
वितं किंमानालप तीत्यपरं खलु शठः कोपस्तस्याप्याश्रितः इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्वनस्थांतरे सव्याजहसितं मयाधृ
तिहरोमुक्तस्तु वाष्पस्तया अत्रशृंगारस्य कोपशांतिरंगं ५ भावोदयो यथा तदद्यविश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्वि
लोकिनी अदर्शि पादेन विलिख्य पत्रिणा तवैवरूपेण समः समस्त्रियः अत्र नलं प्रति दमयंत्या औत्सुक्यरूपभावस्योदयः शृं
गाररसस्यांगं भावसंधिर्यथा एकाभूत्कुसुमायुधेषुभिरिव प्रव्यक्तपुंखावली जेतुं मंगलपालिकेव पुलकैरन्या कपोलस्थली लो
लाक्षीक्षणमात्रभाविविरहक्लेशासहा पश्यतो द्रागाकर्णयतश्च वीरभवतः प्रौढाहवाडंबरं अत्ररमणीप्रेमरणोत्सुकयोः सं
धिः प्रभुविषयभावस्यांगं भावशबलता यथा क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो को

उपामइति नायकस्य स्वमित्रं प्रति नायिकावृत्तांतोक्तिः मयि तूष्णींभूते किमियं प्रपद्यते कुरुते तत्स्वरूपामइत्यभिप्रायेण मया स्थैर्यं मौनरूपमालंवितमंगी
कृतं पश्यामइति बहुवचनं सखीसमानाभिप्रायं एवं तया । ० परं खलु शठो मां किमिति नालपति भाषत इति कोप आश्रितः इत्यन्योन्यं परस्परं किंलक्ष्याल
क्ष्यरहिता या दृष्टिस्तत्र चतुरे सव्याजं निमित्तांतरव्याजसहितं ५ तदिति एधि भव निनीषामि नेतुमिच्छामि यतस्तवैवरूपेण समः समस्त्रियोनलः पत्रिणा हं

सेनपादेन विलिख्य अदर्शि दर्शितः एकेति

पपिकांतेमुख

र्देवीरक्षणमात्रेण पुद्मस्थानाद्भावी योविरहक्लेशस्तदसहिष्णुलोलाक्षीदपि तापपरस्तथा प्रौढसंग्रामाडंबरमाकर्णयतश्च भवतः एकाकपोलस्थलीद्रा
कु॰ टी॰ द्रवीरक्षणमात्रेण पुद्मस्थानाद्भावी योविरहक्लेशस्तदसहिष्णुर्लोलाक्षी
चं॰ कपोलघ्रंपुलकैः कुसुमायुधस्य मदनस्येषुधिस्तरुणीमिव प्रव्यक्ता पुंखावलीशरपुंखपंक्तिर्यत्र तथाभूता ऽभूत् अन्या द्वितीया जेतुर्जयशीलस्य मंगलपा
८६ लिकामंगलरूपा पालिका या कुशकाशादिनिर्मिता उभयपार्श्वस्थस्तंभत्रुक्षादिषु बद्धा मार्गपालीति प्रसिद्धा तद्वदभूदित्यर्थः अत्र प्रेमपदोक्तापारतेर्पालिपु
त्वाद्भावरूपत्वं बोध्यं क्वाकार्यमिति शुक्रकन्या देवयानी दृष्टवतो राज्ञो ययातेरियमुक्तिः अकार्यं ब्राह्मणकन्यासक्तिः शशलांछनस्य चंद्रस्य कुलं सोमवं

किं वक्ष्यंत्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति अत्र वितर्कौत्सुक्यमति
स्मरणशंकादैन्यधृतिचिंतानां शबलता ॥ विप्रलंभशृंगारस्यांगं प्रमाणालंकारप्रसंगस्य यथा क्रांतकांतवदनप्रतिबिं
बे भग्नबालसहकारसुगंधौ स्वादुनि प्रणदितालिनि शीते निर्विवार मधुनींद्रियवर्गः ९ यथा वा किं तावत्सरसि सरोजमेतदारादा
हो स्विन्मुखमवभासते युवत्याः संशय्य क्षणमपि निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः पूर्वत्र प्रत्यक्षमात्रमत्र तु वि
शेषदर्शनजन्यसंशयोत्तरप्रत्यक्षमिति भेदः अनुमाने यथा यथा यारंध्रेप्योम्निश्चलज्ज्वलदधूमः स्थगयति स्फुलिंगानारूपं दधति व
यथा कोदंडमण पः यथा विद्युज्ज्वालोल्लसितपरिपिंगाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखंडे स्मरदवः यथा वा यत्रैता लह
रीचलाचलदृशो व्यापारयंति भ्रुवौ यत्तत्रैव पतंति संततममी मर्मस्पृशो मार्गणाः तच्चक्रीकृतचापपुंखितशरप्रेंखत्करः क्रोधनो धा

वत्यग्रत एव शासनधरः सत्यं तदा ऽसौ स्मरः ॥

गः अयं वितर्कः तदुपमर्दैन भूपोपीत्यौत्सुक्यं एवमग्रेपि श्रुतं शास्त्रश्रवणमिति मतिः अहो कोपे
पीति स्मरणं अपगतकल्मषः कृता सुकृताधी येषां ते किं वदिष्यंतीति शंका स्वप्नेपीति दैन्यं हे चेतः स्वास्थ्यमुपैहीति धैर्यं कः खलु धन्यो युवा तरुणः अधरं
धास्यति पास्यतीति चिंता विप्रलंभो वियोग इति पर्यायो क्रांते तिइंद्रियाणां वर्गः समूहः मधुनि मद्ये निर्वैवार निर्वृतिमाप कथंभूते संक्रांतिप्रियमुखप्रतिबिंदे

किमिति आरात् दूर

भ्रमरकोमलाम्रपल्लववत्सुगंधौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शे चेति अत्रेंद्रियत्वं ... अलंकारः किमिति आरात् दूर

भ्रमरकोमलाम्रपल्लववत्सुगंधौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शे चेति अत्रेंद्रियत् ... ... ... लंकारः किमिति आरात् दूर

इति क्षणं संदिह्य कश्चित् वकसहवासिनां कमलानां परोक्षे रदृष्टे पर्विवर्ती कैं मीनात्स्मिय कथालापे विच्चोकोनाद ... क्रियेत्युकलक्षणे हाव विशेषेमु खमिति निश्चि

कायनिर्णीतवान् इति प्रत्यक्षं पयेति यथाशब्दा अनुमानार्थाः यथाशब्दस्तु निर्दिष्टस्तत्प्रयोगानुमानयोरिति विभ्वकोशात् तथाच चपलजलदरूपो धूम

व्योमस्याकाशस्य रंध्रमवकाशं यस्मात्स्थगयति यस्माच्च कीटमणयः खद्योताः स्फुलिंगानां रूपं दधति धारयंति यस्माच्च विद्युद्रूपाभिर्ज्वालाभिरुच्च

पूर्वं रूपकसंकीर्णमिदमतिशयोक्तिसंकीर्णमिति भेदः शुद्धानुमानं यथा निलीयमानैर्विहगैर्निमीलद्भिश्च पंकजैः विकसंत्यापि

मालत्या गतोस्तं ज्ञायते रविः ॥ यथा वा सौमित्रेननु सेव्यतां तरुतलं चंडांशुरुज्जृंभते चंडांशोर्निशि का कथा रघुपते चंद्रोऽयमुन्मी

लति वत्सैतद्विदितं कथं नु भवता धत्ते कुरंगं यतः क्वासि प्रेयसि हा कुरंगनयने चंद्रानने जानकि ॥ उपमानं यथा तारोहिणी

विजानीहि ज्योतिर्यामत्र मंडले यस्तन्वितारकान्यासः शाकटाकारमाश्रितः अत्र मन्मथमिवातिसुंदरं दानवारिमिव दिव्यते

जसं शैलराजमिव धैर्यशालिनं वेद्मि वेंकटपतिं महीपतिं पूर्वोदाहरणे उपमानभूतमतिदेशवाक्यं दर्शितं अत्रातिदेशवाक्या

र्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः शब्दप्रमाणं यथा विद्वण्वता दोषमपिच्युतात्मना त्वयैकमीशं

प्रति साधु भाषितं यमामनंत्यात्मभुवोपि कारणं कथं स लक्ष्यप्रभवो भविष्यति अत्र शिवः परमेष्ठिनोपि कारणमित्यत्र श्रुति

रूपं शब्दप्रमाणमुपन्यस्तं ॥

सिताः मकाशीभूताः परितः पिंगवर्णाश्च ककुभो दिशस्तस्मात्पथिकरूपाणां ॥ तरूणां खंडे समूहे स्मर

लक्षणोदवाग्निर्लग्नः इति मन्ये इत्यन्वयः प्रयोगस्तु पथिकतरुखंडे स्मरदावानलवत् व्योम व्यापि जलदधूमवत्त्वादिति बोध्यः यन्नेतादृतिलहरीव चलाचला

श्चंचलादृष्टयो यासां ता एताः कामिन्यः यत्र जनं भ्रूलतां आपारयंति प्रेरयंति तत्रैव भ्रूसंज्ञाविषय एव यद्यस्मादमी मर्मस्पर्शिनो बाणाः सन्नते पतंति ॥

ततस्तस्मान्मदनलीलतेचापेपुंखितायोजितमुखायेशरास्तेषुमेखनचपलः करोयस्यतादृशः क्रोधनःस्मरः शासनमाज्ञातद्धारकस्मासामग्रतोधावतीतिसत्यमित्स
न्वयः अतिशयोक्तीति मार्गणत्वेनदृशामध्यवसानादितिभावः प्रयोगस्तु एताः चक्रीकृतचापंसदापुरोधावदाज्ञाकरमदनकाः मर्मभेदि वाणपाताश्रय
भूसंज्ञास्थानकत्वादितिवोध्यः एवंनिलीयमानैरित्यत्रापि अयंकालः सूर्यास्तमयवान् पक्षिनिलीयमानतायाश्रयत्वादिति रविरस्तगमनवान् तादृश
कालसंवंधित्वादितिवाप्रयोगोज्ञेयः ९ सौमित्रेइति विरहातुरस्यरामस्यलक्ष्मणंप्रत्युक्तिः अत्राप्ययंचंद्रः कुरंगधारित्वादिप्रयोगः इत्यनुमानं तामिति ना

एवंस्मृतिपुराणागमलौकिकवाक्यरूपाण्यपिशब्दप्रमाणान्युदाहरणीयानि तत्रस्मृतिर्यथावलात्कुरुतपापानिसंतुतान्यकृतानिवः
सर्वान्वलकृतानर्थानकृतान्मनुरब्रवीत् पूर्वंश्रुतिरभिमतार्थेप्रमाणत्वेनोपन्यस्ता इहतुस्मृतिरनभिमतार्थेतद्दूषणपरेणप्रमाणत
याऽनीतेतिभेदः आचारात्मतुष्ट्योरपिमीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतयाशब्दप्रमाणएवांतर्भावः ९ तत्राचारप्रमा
णंयथा महाजनाचारपरंपरेदृशीस्वनामनामादद्तेनसाधवः अतोभिधातुंनतदुत्सहेपुनर्जनः किलाचारमुचंविगायति आ
त्मतुष्टिप्रमाणंयथा असंशयंक्षत्रपरिग्रहक्षमायदार्यमस्यामभिलाषितेमनः सतांहिसंदेहपदेषुवस्तुषुप्रमाणमंतःकरणस्यवृ
त्तयः अत्रदुष्यंतेनात्मतुष्ट्याशाकुंतलापरिग्रहस्यधर्म्यत्वंश्रुत्यनुमतमनुमीयते एवंश्रुतिलिंगादिकमपिमीमांसोक्तंप्रमाणंसभ
वदिहोदाहर्तव्यं तत्रश्रुतिर्यथा त्वंहिनाम्नैववरदोनाधत्सेवरमुद्रिकां नहिश्रुतिप्रसिद्धार्थेलिंगमाद्रियतेवुधैः अत्रकरिगिरी
रकाणांन्यासःसंनिवेशः शकटस्याकारसंस्थानेआश्रितस्तारोहिणीविज्ञानीहोत्पतिदेश ९ भ्वरस्यवरदइत्यभिधानश्रुत्यासर्वाभिलषितंदात
वाक्यार्थज्ञानमिहोपमानं इयंशकटाकारनक्षत्रव्यक्तिः रोहिणीपदवाच्येत्युपमितिप्रतिकरणत्वात् अत्रेति अत्रएषुराजसुमध्येमन्मथमिवातिसुंदरमही
पतिंवेकटपतिसंज्ञंवेद्मीत्याद्यन्वयः दानवारिर्विष्णुः शैलराजेहरंधैर्यशालिनंमदनंशासकत्वात् प्रत्यक्षरूपमिति सादृश्यविशिष्टपिंडप्रत्यक्षस्यादिफला

मत्रस्येंदुप्रकाशनसामर्थ्यरूपेण लिंगेनेंदोपस्थानेविनियोगेनाद्रियत इत्यर्थः करिगिरीश्वरः कालहस्तीश्वरः विदितमिति इत्थंभूतः परार्थैकप्रवृत्तिकः
अतदूतस्यचेष्टारूपेप्रमाणांतरेणाशकनीयमित्यग्रतनेनान्वयः लोलेतिगुरुणासंनिधावपिद्वाभ्यांनायक नायकाभ्यांसमयोचितोविधिर्नोल्लंघ्यः
पयालोलङ्गलतयानायिकयाविपक्षस्यसपत्न्यादेर्दिश उपन्यासेतत्सकाशादागतोसीतिसूचनेकृते नायकेमनेतिसूचनायशिरोविधूतंसंचालितं नट
स्तहृत्तोतय रीक्षणेनायिकायाकृतेसत्यकृतनमस्कारः विलक्ष्य एवस्थितः ततईषत्ताम्राकपोलकांतिर्यस्यतदृशनायिकायामुखेकोपातिशयाज्ञातेस

श्रुतेर्नलमुखचंद्रविषयत्वेकल्पितेतयाव्याख्यातृस्मरवाक्यंप्रमाणतयोपन्यस्तं अर्थापत्तिर्यथा निर्णेतुंशक्यमस्तीतिमध्यंतव
नितंविनि अन्यथानोपपद्येतपयोधरभरस्थितिः यथावा व्यक्तंवलीयान् यदिहेतुरागमादपूरयत् साजलधिंजान्हवी
गंगौघनिर्भर्त्सितशंभुकंधरासवर्णवर्णःकथमन्यथास्यात् अनुपलब्धिर्यथा स्फुटमसदवलग्नंतन्विनिश्चिन्वतेनेतदनुपलभ
मानास्तर्कयंतोपिलोकाः कुचगिरिवरयुग्मंयद्विनाधारमास्ते तदिहमकरकेतोरिंद्रजालंप्रतीमः संभवोयथा अभूतपूर्वम
मभाविकिंवासर्वं सहेमेसहजंहिदुःखं किंतुत्वदग्रशरणागतानांपराभवोनाथनतेनुरूपः ५ यथावा येनामकेचिदिहनः
प्रथयंत्यवज्ञांजानंतितेकिमपितान्प्रतिनैषयत्नः उत्पत्स्यतेस्तिममकोपिसमानधर्माकालोह्ययंनिरवधिर्विपुलाचपृथ्वी ॥

तितत्पादयोर्दृष्टिपातेनैवानतःप्रणतइति ५ किमसुभिरिति व्याख्यातंप्राक् तयेति नलमुखचंद्रविषयवव्याख्यातुःस्मरस्येत्यर्थः तच्चासिद्धत्वा
त्कल्पितमितिभावः इतिशब्दः निर्णेतुमिति अस्तीतिनिर्णेतुं शक्यमित्यन्वयः व्यक्तमिति हेतुस्तर्कः याद्व्यक्तंप्रकटंवलीयान् तदासाजान्हवी
जलधिनापूरयत अन्यथापूरणेसति अर्णःसमुद्रस्यजलं गंगौघैर्निर्भर्त्सितंतिरस्कृतंसत् शंभुकंठसमानवर्णंनीलंकथंस्यादित्यन्वयः इत्य
र्थापत्तिः स्फुटमिति हेतन्वितर्कयंतस्तर्कशीलाअपिलोकास्तदवलग्नंअनुपलभमानाअपश्यंतस्तदा वलग्नंमध्यमसदितिस्फुटमेवनिश्चिन्वंत

कुलपर्वतश्रेष्ठपुरुषत्वेनाध्यवसितंस्तनद्वंद्वमाधारं विनायदास्तेत त्विहमकरध्वजस्येंद्रजालं मायाचरितं प्रतीमइत्यन्वयः इत्यनुपलब्धिः अभूतेति इत्थं
रप्रतिभक्तस्योक्तिः पूर्वं न भूतं अभूतपूर्वं तादृशा मम किं वा भावि न किंचित् सर्वं शीतातपादिद्वंद्वं सहे हि यतो मम सहजमेव दुःखमस्ति किंतु हे नाथ
नेतत्व शरणागतानां भक्तानां त्वद्दैन्यपराभवो नानुरूपो नोचित इत्यन्वयः अथवा तव नानुरूप इत्यन्वयः अत्र दुःखादेः संभवाख्यप्रमाणसिद्धस्य कथनं
ःपेनामेति भवभूतेरुक्तिः नामेति कुत्सने नामप्रकाश्यसंभाव्यक्रोधापगमकुत्सन इत्यमरः किमपीति काकुः न किमपीत्यर्थः एषः काव्यनिर्माणरूपः म

यथावा भ्रातः पांथ कुतो भवान्नगरतो वार्त्ता न वा वर्तते वाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति सत्यं जीवति जीवतीति कथिता वा
र्त्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोपि विविधः किं किं न संभाव्यते अत्राद्योदाहरणेऽभूतपूर्वं मम भावि किं वेति संभव
प्रमाणसिद्धार्थो दर्शितः द्वितीयोदाहरणे संभवोपपादकं कालानंत्यादिकमपि दर्शितं तृतीयोदाहरणे तु संभवोपि कंठोक्त इति
भेदः ऐतिह्यं यथा कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे एति जीवंतमानंदो नरं वर्षशतादपि अत्र लौकिकी गाथेयमि
त्यनिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपता दर्शिता अथैतेषामलंकाराणां यथासंभवं क्वचिन्मेलने लौकिकालंकाराणां मेलन
इव चारुत्वातिशयोपलंभान्नरसिंहन्यायेन पृथगलंकारावस्थितौ तन्निर्णयः क्रियते तत्र तिलतंडुलन्यायेन स्फुटावगम्य
भेदालंकारमेलने संसृष्टिः नीरक्षीरन्यायेनास्फुटभेदालंकारमेलने संकरः स चांगांगिभावेन समप्राधान्येन संदेहेन एकवाचका
नुप्रवेशेन चतुर्विधः एवं नृसिंहाकाराः पंचालंकाराः

मकोपि समानधर्मा सदृशोपि इत्यस्यते अस्ति वा तं प्रति यतः हि यस्मान्निरवधिरयं का
लः पृथ्वी च विपुलेति क्रमेण योज्यं अत्र कालो ह्ययमित्यादिना सोपयति कं संभवाख्यप्रमाणमुपदर्शितं भ्रातरिति पथिकं प्रति ग्रामस्थस्य प्रश्नः कुत
इत्यनंतरमागत इति शेषः नगरादिस्तु तं वार्तेति पुनः पूर्वस्य प्रश्नः वाढमित्युत्तरं अंगीकारेऽस्तीत्यर्थः ब्रूहीति पूर्वस्योक्तिः युवेत्यादि पांथवचनं ॥

सत्यजीवतीति पुनः पूर्वस्य प्रश्नः जीवतीत्यादिसर्वपांथवचनं इति संभवः अनिर्दिष्टप्रवक्तृकेति अनिर्दिष्टो विशेषतो नुक्तः प्रवक्ता यस्येत्यर्थः एवंचैतद्वैतिह्यलक्षणमिति दर्शितं इत्यलंकारचंद्रिकायां प्रमाणालंकारप्रकरणं संपूर्णं यथासंभवमिति संसृष्टिसंकराभ्यां द्वयोस्तदधिकानां वेति यथासंभवमित्यर्थः स्फुटेति स्फुटमवगम्यमानो भेदो येषामिति विग्रहः एकस्मिन्वाचकेनुप्रवेशोऽवस्थितिः एतत्सर्वमुदाहरणे व्यक्तीभविष्यति कुसुमेति माघऋतुवर्णने पद्यमिदं अन्वयः काकयापि वनितया चलितया कलस्वरो मेखलायाः काञ्च्याः कलकलः कोलाहलो विदधे किंभूतया कुसुमसौरभलोभेन परिभ्र

तत्र संसृष्टिर्यथा कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया अत्र शब्दालंकारानुप्रासयमकयोः संसृष्टिः लिंपतीव तमोंगानि वर्षतीवांजनं नभः असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता अत्रो त्प्रेक्षयोरुपमायाश्चेत्यर्थालंकाराणां संसृष्टिः आनंदमंथरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य पादांबुजं भवतु मे विजयाय मंजुमंजीरसिंजितमनोहरमंबिकायाः अत्र शब्दार्थालंकारयोरनुप्रासोपमयोः संसृष्टिः अंगांगिभावसंकरो यथा लेल खवेयं तमहीरुहाणां छायास्तदामारुतकंपितानां शशांकसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखंडाः अत्र शशांकसिंहेनेति तमोगजानामिति च रूपकं यद्यप्यत्र शशांक एव सिंहस्तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवत् शशांकः सिंह इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या तथापि लूनाकृतीनामिति विशेषणानुगुण्या

मतो भ्रमराणां संभ्रमेण त्वराविशेषेण संभृता समृद्धा शोभा यस्यास्तया अलकालोला यस्यास्तादृशी दृक् यस्यास्तथाभूतयेति आनंदेति आनंदेन मंथरं यथा स्यात्तथा पुरंदरेणेंद्रेण मुक्तमर्पितं माल्यं यत्र तादृशं महिषासुरस्य मौलौ मस्तके हठेन निहितं मंजु मनोज्ञं मंजीरस्य नूपुरस्य सिंजितं रणितं यत्र तादृशमनो रमं अंबिकायाः पादांबुजं मे विजयाय भवत्वित्यन्वयः अत्र पादांबुजमित्युपमितसमास एव नतु मयूरव्यंसकादिवत्पादएवांबुजमिति

तथा सत्यंबुजप्राधान्ये मंजीरासंजितान्वयायोगादित्युपमैव न रूपकमिति ज्ञेयं इति संक्षेपः तलेष्विति तदा मारुतकंपितानां महीरुहाणां तलेषु छाया अवेपंत कंपमाना आसन् तत्रोत्प्रेक्षते शशांकरूपेण सिंहेन छिन्नाकृतीनां तमोलक्षणगजानां शरीरखंडा इवेति गुणानां चेति तार्तीयाधिकरणसूत्रं अस्यार्थः गुणानां गुणभूतानां पदार्थानां परार्थत्वात् मुख्यप्रधानार्थत्वात् परस्परमसंबंधः कुतः समत्वात् अप्रधानत्वसाम्यादिति यथा भाष्यकारमते पावमानेष्टीनामाधानस्य चाहवनीयाद्यर्थत्वात् परस्परं नांगांगिभावसंबंधः यथा वार्तिककारमते न अग्निसमिंधनार्थानां मंत्रविशेषरूपाणां निविदां सामधेनीनां चेति

तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं न तु गुणेन गुणानां च परार्थत्वादसंबंधः समत्वात्स्यादिति न्यायादुपमितिसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वात् शशांकस्य तमसां च प्राधान्यं भवेत् तत्र न विशेषणमुख्यार्थान्वयस्वारस्यमस्ति ॥ स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वकर्मत्वान्वयसंभवेपि मुख्यार्थान्वयस्वारस्यमेवादरणीयं स्वरूपनाशक्रोडीकरणप्रवृत्तपालक्षणामूलातिशयोक्त्या रूपकसिद्धिः तच्च रूपकमुत्प्रेक्षायामंगं तदुत्थापकत्वात् रूपकभावे हि छायानां लूनगात्रखंडा इवावेपंतेत्येतावदुक्तावुपमेव सिद्धेत् वेपनादिसाधर्म्यात् छायानां सद्यः कृतगात्रखंड तादात्म्यसंभावनारूपोत्प्रेक्षा ननु शशांकेन लूनाकृतीनां तमसां गात्रखंडा इवावेपंतेत्येतावदुक्तावपि सिद्ध्यत्युत्प्रेक्षा तादात्म्यसंभावनोपयुक्तलूनाकृतिलरूपाधिकविशेषणोपादानात् तथोक्तावाकृतिलवनादिधर्मे रूपकाय समारोपनिर्मिताशशांकतमसोर्हंतृहंतव्यचेतनवृत्तांतसमारोपरूपासमासोक्तिर

संक्षेपः एतदधिकरणपूर्वपक्षसिद्धांतौ प्रकृतानुपयोगान्न दर्शितौ ॥ स्वरूपनाशेति स्वरूपनाशरूपमुपचरितं गौणं यदाकृतिलवनमित्यर्थः नन्वेवमपि तमोंशुकस्य विशेषणस्यान्वयात् कथं रूपकसिद्धिरित्याशंक्याह स्वरूपेति क्रोडीकारेण निगरणेन लक्षणामूलेति साध्यवसानलक्षणामूलेत्यर्थः तथा च तमोंशे उपचारेणान्वय इति भावः न चैवं सत्युपमांगीकारेपि किं बाधकमिति वाच्यं तदंगीकारे प्रधानान्वयेप्युपचाराश्रयणापत्तेः

एकस्य चमत्कृतिजनने परापेक्षत्वादंगांगिभावमात्रं क्वाह परस्परेति अंगुलीभिरिति शशी अंगुलीभिरिव मरीचिभिः केशसंचयमिव तिमिरं संनिगृह्य कु

ड्मलीकृतसरोजलोचनं लोचनमिव सरोजं यन्नतादृशं रजनीमुखं चुंबतीवेत्यन्वयः तत्प्रायेति उपमाबहुलेसंदर्भेपाठादित्यर्थः मुख्येति मुख्यार्थस्य

पलकुड्मलीकरणरूपलिंगपुष्ट्या साधारणधर्मत्वस्यानुकूल्यादित्यर्थः उत्थापकत्वाविशेषत्वात् अंगत्वाविशेषात् चंद्रस्य चुंबनोत्प्रेक्षायादोपसम्म

वहारसमारोपात्मकसमासोक्तौ चापेक्षितस्य नायकसाधर्म्यस्योक्तोपमाभ्यामसमर्पणात्कथं तयोः संदेहगत्वमिति शंकते यद्यपीति मरीचिरिवेति तिमिरी

श्री उपमयोरुभयत्रोत्थापकत्वाविशेषात् समासोक्तिगर्भत्वं विना चुंबनोत्प्रेक्षाया निरालंबनत्वाच्च तत्रश्चात्राप्युत्प्रेक्षासमासोक्त्यो नतु शशिनायकयोर्निधानापिकयोश्च साधा

रेककालयोः समप्राधान्यं यद्यप्यत्रोपमाभ्यां शशिनि प्रागतत्वेवधर्मो समर्थ्येते नतु शशिनायकयोर्निधानापिकयोश्च साधारणगुणक्रियानिमित्तसापेक्ष

रणधर्मो साधारणधर्मसमर्पणं चोत्प्रेक्षासमासोक्त्योरपेक्षितं उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियानिमित्तसापेक्ष रमरीचिभिरिवेत्यन्वयांतरमभ्युपगम्यान्व

त्वात् समासोक्तेर्विशेषणसाम्यमूलकत्वाच्च तथापि वाक्योक्तोपमायामिवकारस्य मरीचिभिरिवेत्यन्वयांतरमभ्युपगम्यान्व सरोजसदृशं लोचनमिति समासांतरमभ्युपगम्या

पभेदलब्धप्रकृताप्रकृतयोरेकैकविषयस्यार्थद्वयस्य समासोक्तोपमायां सरोजसदृशं लोचनमिति समासांतरमभ्युपगम्य समासभेदलब्धार्थद्व

त्वपभेदलब्धप्रकृताप्रकृतयोरेकैकविषयस्यार्थद्वयमूलायां सरोजसदृशं लोचनमिति समासांतरमभ्युपगम्य इह प्रकृतकोटिगतानां मरीचितिमिर

यस्यवाभेदाध्यवसायेन साधारण्यं संपाद्य तयोरुत्प्रेक्षासमासोक्त्योरंगतानिवाह्या पद्मा इह प्रकृतकोटिगतानां चांगुलीकेशसं

सरोजानामप्रकृतकोटिगतानां चांगुलीकेशसं

भिरिवांगुलीभिस्तिमिरमिव केशसंचयमित्येवंरूपमित्यर्थः एकैकविषयस्यार्थद्वयस्याभेदा

ध्यवसानेनेत्यन्वयः तयोः वाक्यसमासोक्तोपमयोः आवश्यकाभेदाध्यवसायेनोपपत्तीकृतमन्वयांतरसमासांतरकल्पनागौरवेणेत्याशयेनाह यद्वे

तिन नु दीर्घत्वादेः पूर्वनिपातनियमानुरोधेन यथासंख्यक्रमपरित्यागः तथा चांगुलिमरीच्योस्तनुत्वनीरंध्रत्वाभ्यां तिमिरकेशसंचययोरावरणरूपत्व

कु॰ टी॰ सरोजलोचनयोर्दीर्घत्वकांतिमत्त्वाभ्यां च सादृश्यं बोध्यं प्रातिस्विकरूपेण अंगुलित्वमरीचित्वादिना अनुगतेति अनुगतं यत्सादृश्यं प्रयोजकं रूपं तत्तुल्यत्वा
चं॰ दिकं तेनेत्यर्थः एतच्च सादृश्यमतिरिक्तमित्यभिप्रायेण सिद्धांतादिति तदुक्तं साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदप्रधानं चेत्युपक्रम्य विद्यानाथेन उपमानन्वयोपमेयोपमास्मरणानां भेदाभेदसाधारणसाधर्म्यमूलत्वमिति ननु भेदाभेदरूपांशद्वयोपेताया उपमाया अभेदांशस्यानुपयोगात्कथं
९१ तस्या उत्प्रेक्षाद्युपयोगित्वमित्याशंक्य परिहरति नहीति प्रकाशश्च शीतापनयनं चेति द्वंद्वः शीतालुः शीतार्तः शीतोष्णातृप्तिभ्यस्तदसहन इति चालु-

त्वं नीरंध्रत्वकांतिमत्त्वादिना सदृशानां प्रातिस्विकरूपेणे भिन्नवदनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति स चात्र विवक्षित एव भेदाभेदोभयप्रधानोपमेत्यालंकारिकसिद्धांतात् तत्र च प्रयोजकांशनिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेन साधारण्यं संपाद्य प्रधानभूतोत्प्रेक्षासमासोक्त्यंगतानिर्वाह्या न हि प्रकाशशीतापनयनशक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेण शीतालूपयोगितानदृष्टा एवमनभ्युपगमे च पांड्योऽयमंसार्पितलंबहारः क्लृप्तांगरागो हरिचंदनेन आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः इत्याद्युपमापि न निर्वहेत् नह्यत्राद्रिराजपांड्ययोरुपमानोपमेययोरनुगतः साधारणधर्मो निर्दिष्टः एकत्र बालातपनिर्झरावन्यत्र हरिचंदनहारावितिधर्मभेदात् तस्मात्तत्रातपहरिचंदनयोर्निर्झरहारयोश्च सदृशयोरभेदांशोपजीवनमेव गतिः ९ पिनष्टीव तरंगाग्रैः समुद्रः फेनचंदनं तदादाय करैरिंदुर्लिंपतीव दिगंगना इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समग्रा त्वात्
उक्तसिद्धांतस्य निर्युक्तिकत्वेनाश्रद्धेयत्वमाशंकमानं प्रत्याह एवमिति पांड्योऽयमिति पांड्यनामा पंच्राधानं अन्योन्यनिरपेक्षवाक्यद्वयोपात
पः अद्रिराज इवाभाति कथंभूत अंसयोरर्पितो लंबो हारो येन सः तथा हरिचंदनेन रक्तचंदनेन क्लृप्तः कृत अंगरागोऽनुलेपनं येन तथाभूतः अद्रिराजः कीदृक् बालातपेन रक्तानि सानूनि प्रस्थानि यस्य सः तथा निर्झरस्योद्गारेणोद्गमेन सहितः ९ पिनष्टीति व्याख्यातं प्राक् पौर्वापर्येणेति तथा च चमत्कारप्रयोजकपौर्वापर्यघटकत्वेन भेदानवभासात्संश्लिष्टैवेत्युक्षण्णमिति भावः

दर्शादिवद्दर्शपौर्णमासादिवत् अयं च भिन्नकालीनयोरपि समप्रधान्ये दृष्टान्तः फलं तत्र स्वर्गः प्रकृते तु चमत्कृतिविशेषः शशिनमिति तत्र अजस्येंदुमत्याः स्व
यंवरे समगुणयोरजेंदुमत्योर्योगेन प्रीतिर्येषां ते पौराः नागरिकाः नृपाणामन्येषां श्रवणयोः कटुपीडाकरं इति पूर्वार्द्धं रूपं एकमेव वाक्यं विवव्रुः उच्चारयामा

तदादायेति फेनचंदनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात् न चैवं लिंपतीव तमोंऽगानीतिवदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमि
ति वाच्यं लौकिकसिद्धयेषणलेपनयोर्वा पर्यच्छायानुकारिणोत्प्रेक्षाद्वयपौर्वापर्येण चारुतातिशयसमुन्मेषतः संसृष्टिवैषम्यात्
तस्माद्दर्शादिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयं एवं समप्रधानसंकरोऽपि व्याख्यातः संदेहसंकरो यथा शशिनमुप
गते यं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं
विवव्रुः अत्र द्वयमिति सर्वनाम्ना यघजवृत्तवर्तीन्दुमती विशिष्टरूपेण निर्दिश्यते तदा बिंबप्रतिबिंबभावापन्नधर्मविशिष्टयोः स
दृशयोरैक्यारोपरूपा निदर्शना यदि तेन सा स्वरूपेणैव निर्दिश्यते बिंबभूतो धर्मस्तु पूर्वप्रस्तावात्समगुणयोगप्रीतय इति यो
विशेषणाच्चावगम्यते तत्र प्रस्तुते धर्मिणि तद्वृत्तांतप्रतिबिंबभूताप्रस्तुतवृत्तांतारोपरूपत्वलितमित्यनध्यवसायात्संदेहः विलीये
दुःसाक्षादमृतरसवापी यदि भवेत्कलंकस्तत्रस्थो यदि च विकचेंदीवरवने ततः स्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुंचेयम
दनशिखिपीडापरिभवं अत्र यद्येतावत्साधनं संपद्येत तदा तापः शाम्यतीत्यर्थैकविसंरंभश्चेतदेतदुपात्तसिद्ध्यर्थमूह इति संभा
वनालंकारः एतावत्साधनं कदापि न संभवत्येवातस्तापशांतिरपि गगनकुसुमकल्पेत्यर्थैकविसंरंभश्चेदुपात्तमिथ्यात्वसिध्यर्थं

मुरित्यन्वयः तेन सर्वनाम्ना साइंदुमती बिंबभूतो धर्मः अजकर्मकं वरणं तत्र तस्मि ‘‘ मिथ्यातरकल्पनारूपा मिथ्याध्यवसितिरित्युभययथा
न्यस्ते विलीयेति अग्निसंयोगेन घृतादिवत्केनापि हेतुना विलीनतां प्राप्येत्यर्थः विकच विकसितं जडभावः शैत्यं मदन एव शिखी वन्हिः संरंभस्तासयं

स्थितास्त्वेतीक्तैर्जलैः सिक्तं मौक्तिकमित्यन्वयः ॥ मुखेनेति संदोहः समूहः लक्षयित्वेति स्फुटमत्र विषये शब्दार्थालंकृतिद्वयमिति सूत्रेणेत्यर्थः स्पष्टेति
स्थितास्त्वेतीकृतैर्जलैः सिक्तं मौक्तिकमित्यन्वयः ॥ मुखेनेति संदोहः समूहः लक्षयित्वेति स्फुटमत्र विषये शब्दार्थालंकृतिद्वयमिति सूत्रेणेत्यर्थः स्पष्टेति
अथोऽनंतरं दिवसरूपमरविंदकमलं संवुकोचसंकोचमगमत् कीदृक् स्पष्टमुच्छ्लंतउच्छ्लसंतः किरणा एव केसराणि यस्यास्तथाभूता सूर्यबिंबरूपा विस्तीर्णा कर्णिका वराटो यस्य तत् श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्टदिश एव दलानां कलापस्तन्मुखेनावतारो यस्यास्तादृशी वृद्धा अंधकाररूपा मधुपावलिर्येन तथाभूतमित्यर्थः पदभेदेनेति सोणत्थिएयगामे जो एअं महमहंतत्ताअं णंतरुणाणं हिअस्स डिय रिसप्पंतिं णिवारेइ समास्तस्यत्र ग्रामेयएतां

एवं सिक्तं स्फटिककुंभांतःस्थितिस्वेतीकृतैर्जलैः मौक्तिकं चेद्व्यक्तां सूते तत्सूध्येस्तसमंप ॥ इत्यादिष्वपि संभावनामिथ्याध्यवसितिसं
देहसंकरो द्रष्टव्यः ॥ मुखेनगरस्तंसुवन्मूलेव सति चेत्फणी फलसंदोहगुरुणा तरुणा किं प्रयोजनं अत्र महोरगवृत्तांते वर्ण्यमाने राज
द्वाररूढखलवृत्तांतोपि प्रतीयते तत्र किं वक्तस्तस्तयाभूतोरगवृत्तांत एव प्रस्तुतेऽप्रस्तुतः खलवृत्तांतस्ततः प्रतीयत इति समासो
क्तिः यद्वा प्रस्तुतखलवृत्तांतप्रस्तापनाया प्रस्तुतमहोरगवृत्तांतकीर्तनमप्रस्तुतप्रशंसा यद्वा वर्ण्यमानमहोरगवृत्तांतकीर्तनेनस
मीपस्थितखलमर्मोद्घाटनं क्रियत इति उभयस्यापि प्रस्तुतत्वात्प्रस्तुतांकुर इति संदेहः एकवाचकानुप्रवेशसंकरस्तु शब्दार्था
लंकारयोरेवेति लक्षयित्वाकाव्यप्रकाशकार उदाजहार स्पष्टोच्छलत्किरणकेसरसूर्यबिंबविस्तीर्णकर्णिकमथो दिवसारविंदं ९८
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धांधकारमधुपावलि संवुकोच अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ पत्रैकस्मिन् श्लोके पद

भेदेन शब्दार्थालंकारयोः स्थितिः तत्र तयोः संसृष्टिरिह तु सं
स्फूरद्धावण्यात्तरुणानां त्वदपलुंठनं परिसर्पंती निवारयतीति संस्कृतं अत्र पूर्वार्द्धे तु
प्रासस्तृतीयपादे रूपकमिति तयोः संसृष्टिः वाच्यप्रतियोगिकत्वादिति वाच्यप्रतियोगिप्रतिसंबंधि यस्य तद्वाच्यप्रतियोगिकं तत्त्वादित्यर्थः एवं च काव्या ९८
अस्यानुप्रासादेः शब्दालंकारस्य तदनुप्रवेशो न वाचकानुप्रवेशाद्दत्तिवकुं युक्तमिति भावः स सुस्करेति यस्यां नगर्यां एणीदृशा उद्यानसंबंधिवापीपयसीवना

गृहे रमंते क्रीडंति कीदृशे समीचीनैः पुष्करैः कमलैर्द्योतिनोपेतरंगास्तच्छोभावति गृहपक्षे समीचीनैः पुष्करैर्वाद्यभांडमुखैर्द्योतितो यो रंगो नृत्यभूमिस्तच्छो
भिनीत्यर्थः पुष्करं करिहस्ताग्रे वाद्यभांडमुखे जले ओष्ठि खड्गफले पद्म इत्यमरः ५ श्लेषभित्तिकेति श्लेषो भित्तिरिव भित्तिर्मूलं यस्येत्यर्थः रागवतीति रंगो
ऽनुरागो रक्तिमा च अंबरमाकाशं वस्त्रं च नन्वत्र विशेषणसाम्यायाभेदाध्यवसायापेक्षणेपि सत्पुष्करेत्यादौ शब्दसाम्यमात्रेणाप्युपमोपपत्तेर्न तदपेक्षेत्यत

अलंकारसर्वस्वकारस्तु एकस्मिन्वाचकेऽनुप्रवेशो वाच्ययोरेवालंकारयोः स्वारसिकः वाच्यप्रतियोगिकत्वाद्वाचकस्येति मत्वायाल
कारयोरप्येकवाक्यानुप्रवेशे शंकरमुदाजहार सत्पुष्करद्योतितरंगशोभिन्यमंदमारब्धमृदंगवाद्ये उद्यानवापीपयसीव यस्यामेणी
दृशो नास्य गृहे रमंते अत्र नास्य गृहवापीपयसोः सत्पुष्करेत्यादिविशेषणे शब्दसाम्यं श्लेषः ५ अमंदमारब्धेत्यादिविशेषणे
ऽर्थसाम्यमुपमा तदुभयमेकस्मिन्निवशब्देनुप्रविष्टमिति तदपि न मन्यामहे सत्पुष्करेत्यादिविशेषणेपि श्लेषभित्तिकाभेदाध्य
वसायरूपातिशयोक्तिलभ्यस्य धर्मसाम्यस्यैव तत्रैव शब्दप्रतिपाद्यतया शब्दसाम्यस्य तदप्रतिपाद्यत्वात् श्लेषभित्तिकाभेदा
ध्यवसायेन धर्मसाम्यमतानंगीकारे अहो रागवती संध्या जहाति स्वयमंबरमित्यादिश्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषसा
म्याभावे न समासोक्त्यभावप्रसंगात् शब्दसाम्यस्यैव शब्दप्रतिपाद्यत्वेपि तस्योपमावाचकत्वस्यैव प्राप्त्या श्लेषवाचकत्वाभावाच्च
शब्दतोऽर्थतो वा कविसंमतसाम्यप्रतिपादने सर्वविधेप्युपमालंकारस्वीकारात् अन्यथा प्रल्हादनाच्चंद्रः प्रतापात्तपनो यथा तथैव
सोऽभूदन्वर्थो राजा प्रकृतिरंजनात् इत्यत्राप्युपमा न स्या ॥

आह शब्देति शब्दतोऽर्थतो वेति शब्दप्रयुक्तमर्थप्रयुक्तं वा यत् कविसंमतं साम्यं तस्येति
पादन इत्यर्थः सर्वविधे सर्वप्रकारे यथेति यदि आल्हादन इति धात्वनुसाराच्चंद्रपदमन्वर्थं अन्वर्थोऽन्वर्थनामा तस्मात् मतद्वयस्याप्ययुक्तत्वात् विधुकरेति
सहंसः तत्र भैमीवनेन दमयंत्या उद्यानेन हृतचित्तो मरविकृतः कथंभूतेन चंद्रकिरणाश्लेषादानैरंगीकृतैर्निष्यंदैः पूर्णैश्चंद्रकांतघटितैस्तरूणामालवालैर्विफ

का॰टी॰ ॰ष्टसमवस्थितेति शब्दप्रयुक्तेत्यर्थः तथाच समप्राधान्यमर्थभेदविषयमिति भावः प्रतिक्षिप्यते निवार्यते कोस्य तत्समनेनेति प्रतिक्षेपो विरोधः मुक्ता इति विदुषां
चं॰ भवनक्षुण्णदिरदुकेलीसुरतक्रिडायां विछिन्नसूत्रात् हारात् गलिताः समार्जनीभिरपसारिताः प्रातःकाले गणसीमांते मंदं चलतां बालानां चरणलाक्षा ।।
८३ रसेनारुणाः मुक्ताः दूराद्दाडिमबीजशंकितधियः क्रीडाशुकाः पत्कर्षंति आकर्षंति तद्गीजनृपते स्त्यागस्य दानस्य लीलायितमित्यन्वयः तत्रैव बालाधिलासार

नह्यत्रान्वर्थेनामरूपशब्दसाम्यं विना किंचिदर्थसाम्यं कविविवक्षितमस्ति तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमाने अलंकारद्वयप्रतीति
स्तत्र तयोरलंकारयोरेकवाचकानुप्रवेशः यथा विधुकरपरिरंभादात्तनिष्यंदपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणां विफलितज
लसेकप्रक्रियागौरवेण व्यरचि सहृतचितस्तत्रभैमीवनेन अत्र हि प्रतिपाद्यमानोर्थः समृद्धिमद्वस्तुवर्णनमुदात्तमिति लक्षणा
नुसारादुदात्तालंकाररूपः असंबंधे संबंधकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिश्च नच सर्वत्रौदात्तस्यासंबंधे संबंधरूपत्व
नरूपत्वं निर्णीतमिति न विविक्तालंकारद्वयलक्षणसमावेशोस्तीति वाच्यं दिव्यलोकगतसंपत्समृद्धिवर्णनादिष्वतिशयास्पृष्ट
स्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयवर्णने चोदात्तास्पृष्टाया अतिशयोक्तेश्च परस्परविविक्ततया विश्रांतेः तयोश्चेहार्थवशसंपन्न
समावशयोर्नांगांगिभावः एकेनापरस्यानुत्थापनात् स्वातंत्र्यपारतंत्र्यविशेषादर्शनाच्च नापि समप्राधान्यं यैः शब्दैरिह संबंधिव
स्तु प्रतिपाद्यते तैरेव तस्यैव वस्तुनो संबंधे संबंधरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात् नापि
संदेहसंकरः एकालंकारकोट्यां तदन्यालंकारकोटिप्रतिक्षेपाभावात् तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणः

णाद्यसंत्रैव वक्ष्यमाणेति शंकितधिय इति वक्ष्यमाणेत्यर्थः तयोः तद्गुणकाव्यलिंगयोः तन्मूलः संकरमूलः ताभ्यां संकर भ्रांतिमत्त्वात् तयोः संकरभ्रांतिमतोः
तस्य उदात्तस्य हेतुमतः कार्यस्य तत्प्रभेदकथनं तत्त्यागलीलायितस्य कार्यमिति वक्तव्ये तदेव त्यागलीलायितमित्यभेदकथनं तदीयेन राजकीयेनेत्यर्थः ।।

अतथ्यौदार्येति अस्यौदार्येत्यर्थः तन्मूलकस्येति वितरणोत्कर्षपर्यवसायिहेत्वलंकारमूलकस्येत्यर्थः ननु राजसंपत्समृद्धेर्यजनागम्यत्वेनावाच्यत्वात्कथं तत्
द्वर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशकथनमित्याशंकायामाह वाचकशब्दस्येति त्रयाणामिति एक उदात्तातिशयोक्त्योरपरो हेत्वलस्तुत्योरसं।

संकरः क्वचित्संकराणामपि संकरो दृश्यते यथा मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्रांगणसीम्नि मंथरचलद्बा।
लांघ्रिलाक्षारुणाः दूराद्दाडिमबीजशंकितधियः कर्षति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितं अत्र तावद्विदुषां
संपत्समृद्धिवर्णनमुदात्तालंकारः तन्मूलको बालांघ्रिलाक्षारुणा इत्यत्र तद्गुणालंकारः तत्रैव वक्ष्यमाणभ्रांत्युपपादकः पदार्थहेतु
ककाव्यलिंगालंकारश्चेति तयोरेकवाचकानुप्रवेशसंकरः तन्मूलः शंकितधिय इत्यत्र भ्रांतिमदलंकारः ताभ्यां चोदात्तालंकारस्या
कृतानीतद्गुतितयोश्च तस्य चांगांगिभावसंकरः एवंविद्वद्गृहवैभवस्य हेतुमतो राज्ञो वितरणविलासस्य हेतोश्चाभेदकथने हेत्वलं
कारः स च राज्ञो वितरणविलासस्य निरतिशयोत्कर्षाभिव्यक्तिपर्यवसायी एतावन्मात्रे कविसंरंभश्चेदुक्तरूपोदात्तालंकारपरिष्कृ
ते हेत्वलंकारे विश्रांतिः कीदृशी संपदिति प्रश्नोत्तरतया निरतिशयैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेन तदीयसंपदुत्कर्षप्रशं।
सने कविसंरंभश्चेत्कार्यनिबंधनाप्रशंसालंकारे विश्रांतिः कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुतांकुरे विश्रांतिः अत्र वि
शेषानध्यवसायात्संदेहसंकरः ९ किंच विद्वद्गृहवैभववर्णनस्यासंबंधे संबंधकथनरूपतयाऽतिशयोक्तेरुदात्तालंकारेण सहैक
वाचकानुप्रवेशसंकरः निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्याप्यद्भुतातथ्यौदार्यवर्णनात्मिकयास्तुत्या सहैकवा

वंऽपोदात्तप्रस्तुतप्रशंसाप्रस्तुतांकुरान्यतरयोरित्येवं त्रयाणां परस्परमित्यर्थः उदात्तालंकारस्य हेत्वलंकारांगतायाः पूर्वमुक्तत्वादुदात्तातिशयोक्तिसंकर।
स्यापि तदंगत्वमिति शंका निरस्यति उदात्तादिमात्रस्यैवेति उदात्तादीत्यादिपदेन हेत्वलंकारपरिग्रहः हेत्वलंकारादीत्यादिपदेन चाप्रस्तुतप्रशंसापरिग्रहः।

तत्रापि निरतिशयैश्वर्यवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्यैव तादृशवितरणरूपकार्यपरिष्कारद्वारा गतद्रम्यप्रस्तुतराजसंपदुत्कर्षप्रशंसारूपायामप्रस्तु
तप्रशंसायामंगत्वेन तद्भूतातथ्यवर्णनारूपात्युक्तिसंकरस्याप्यपेक्षेति भावः यथायोग्यमिति तथाहि उदात्ततद्गुणयोरंगांगिभावसंकरस्य भ्रांतिमदुदात्तयो
रंगांगिभावसंकरस्य चांगांगिभावे च संकरः तथा भ्रांतिमदुदात्तयोरंगांगिभावसंकरस्योदात्तांगकहेत्वलंकारादिसंदेहसंकरस्य चांगांगिभावेन संक
र इति सूक्ष्ममतिभिरूहनीयं ॥ ९ ॥ स्वकीर्त्यनुवृत्तये ग्रंथनाम स्वनाम चोपनिबध्नन् ग्रंथपूर्त्तिमनुवदति अमुमिति स्वग्रंथस्य प्रामाणिकत्वं सूचयितु

तन्मूलकस्याप्रस्तुतप्रशंसालंकारस्य प्रस्तुतांकुरस्य वा राजसंपत्समृद्धिवर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंक
रः वाचकशब्दस्य प्रतिपादकमात्रपरतया व्यंजकसाधारण्यादेषां चत्रयाणामेकवाचकानुप्रवेशसंकराणां समप्राधान्यसंकरः न
ह्येतेषां परस्परमन्यत्रांगत्वमस्ति उदात्तादिमात्रस्यैव हेत्वलंकारादिचारुतापादकत्वेनातिशयोक्तिसंकरस्यांगतया ऽनपेक्षणा
त् एवमत्र श्लोके चतुर्णामपि संकराणां यथायोग्यं संकरः एवमन्यत्राप्युदाहरणांतराण्यूह्यानि ९ अमुं कुवलयानंदमक
रोदप्पदीक्षितः नियोगाद्वेंकटपतेर्निरुपाधिकृपानिधेः चंद्रालोको विजयतां शारदागमसंभवः हृद्यः कुवलयानंदो यत्प्रसा
दादभूदयं ॥ ९ ॥ इति श्रीमदद्वैतविद्याचार्यश्रीमद्द्विजकुलजलधिकौस्तुभश्रीरंगराजाध्वरींद्रवरदसूनोरप्पदीक्षितस्य
कृतिः कुवलयानंदः समाप्तः

माह चंद्रालोक इति शारदागमसंज्ञकश्चंद्रालोकमूलभूतो ग्रंथः शारत्कालागमनेन चंद्रस्यालोक इति श्लेषः तस्मा
च कुवलयानंदः स्वग्रंथो ऽभूत् कुवलयस्य कुमुदस्यानंद इति च श्लेष इति शिवमास्तां विद्वद्वृंदमहामान्यरामचंद्रात्मजन्मना विद्यावैद्यनाथेन कृतालंकार
चंद्रिका एनां कुवलयानंदप्रकाशनविशारदां विदांकुर्वंतु विद्वांसः काव्यतत्वविदां वराः असौ कुवलयानंदश्चंद्रालोकोदितोऽपि सन् प्रतिष्ठां लभते नैव विनालंकार
चंद्रिकाम् १ इति श्रीमत्तत्सद्वाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृताऽलंकारचंद्रिकाख्या कुवलयानंदटीका संपूर्ण

यह पोथी शहर बनारस दिवाकर छापाखानामे कुवलयानंद सटीक शिवचरनके छापाखानेमे छापागया
साकीन महल्ला भदैनी कालीमहलके पास बाकलम दुर्गामिसिर औ छापनेवालेका नाम बदलकारीगर
यह पोथी जिसको लेना होय सो चांदनीचौकमे कुंजगलीके फाटकके पश्चिमतरफ रामचरनके दुकानपर
मिलैगी सम्वत १९२८ मी: आषाढ सुदी १० वार मंगलके दिन समाप्तः ॥ श्रीगणेश ॥